श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

श्रीदेवराजगुरुभिरनुगृहीतं

# ॥ श्रीशैलेशाष्टकम् ॥

*This document* has been prepared by*

***Sunder Kidambi***

*with the blessings of*

**श्री रङ्गरामानुज महादेशिकन्**

**His Holiness *śrīmad āṇḍavan* of *śrīraṅgam***

*This was typeset using LaTeX and the **skt** font.

श्रीः

श्रीमते रामानुजाय नमः

# ॥ श्रीशैलेशाष्टकम् ॥

सौम्यजामातृयोगीन्द्रचरणाम्बुजषट्पदम्।
देवराजगुरुं वन्दे दिव्यज्ञानप्रदं शुभम्॥

शेषः श्रीमानजनि हि पुरा सौम्यजामातृयोगी
भोगी भूतस्तदनु भगवान् राघवस्यानुजन्मा।
भूत्वा भव्यो वरवरमुनिर्भूयसा भासमानः
रक्षत्वस्मान् रघुकुलपतेरास्थितो भद्रपीठम्॥ १॥

श्रोतुं द्राविडवेदभूरिविवृतिं सौम्योपयन्तुर्मुनेः
उत्कण्ठाऽस्ति ममैनमानयत तं तार्क्ष्याश्रयं मण्डपम्।
आविश्यार्चकमूचिवानिति मुदा निश्शेषलोकान्वितः
रङ्गी वत्सरमेकमेवमशृणोत् व्यक्तं यथोक्तक्रमात्॥ २॥

श्रीभूम्यां रङ्गनाथे शठजिदुपनिषद्व्याक्रियां श्रोतुकामे
शेषस्सन्तोषयिष्यन् वरवरमुनितां प्राप्य यो वर्ततेऽग्रे।
काषायश्रीतुलस्यम्बुजमणिसुशिखायज्ञसूत्रत्रिदण्डैः
भान्तं शुभ्रोर्ध्वपुण्ड्रं स्मर हृदय सदा कोशमुद्राङ्कहस्तम्॥ ३॥

कृपया परया स रङ्गराट्
महिमानं महतां प्रकाशयन्।
लुलुभे स्वयमेव चेतसा
वरयोगिप्रवरस्य शिष्यताम्॥ ४॥

समाप्तौ ग्रन्थस्य प्रथितविविधोपायनचये
परं सज्जीभूते वरवरमुनेरङ्घ्रिसविधे।
हठाद्बालः कश्चित् कुत इति निरस्तोऽप्युपगतः
जगौ रङ्गेशाख्यः परिणतचतुर्हायन इदम्॥ ५॥

श्रीमान् रङ्गेश्वरो यद्वकुलवरवचोभाष्यसारार्थजातं
श्रुत्वा सौम्योपयन्ता मुनिवरचरणे च्छात्रभावं प्रपन्नः।
श्रीशैलेशेति पद्यं खगपतिनिलये मण्डपे तत्समाप्तौ
उक्त्वाऽध्येतव्यमेतन्निखिलनिजगृहेष्वादिशत्तत्तदादौ॥ ६ ॥

वेदादौ पूर्वमुक्त्वा हरिरिति सुजनो वक्ति पश्चाद्यथोमित्येवं
वक्तव्यमेतद्वकुलधरवचोऽनुश्रवारम्भकाले।
श्रीशैलेशेति पद्यं प्रथममथ सतां संप्रदायैकनिष्ठैः
लक्ष्मीनाथेति पद्यं स्वयमिति भगवानादिशद्रङ्गनाथः॥ ७ ॥

यद्वद्वक्तुं न युक्तं प्रणवहरिपदाभ्यन्तरेऽन्यत्पदं तत्
कृष्णेत्येतत्कदाचिन्मुनिशतवचनैर्वैदिकैर्ब्रह्मनिष्ठैः।
तद्वद्रङ्गेशभक्तैः शमदमनियतैः साधुभिस्तत्त्वविद्भिः
वक्तुं युक्तं न मध्ये सपदि नियतयोरेतयोः पद्यमन्यत्॥ ८ ॥

शठरिपुरेक एव कमलापतिदिव्यकविः
मधुरकविर्यथा च शठजिन्मुनिमुख्यकविः।
यतिकुलपुङ्गवस्य भुवि रङ्गसुधाकविराट्
वरवरयोगिनो वरदराजकविश्च तथा॥ ९ ॥

॥ इति श्रीशैलेशाष्टकम् संपूर्णम्॥